# श्रीमूकाम्बिका दिव्यसहस्रनामस्तोत्रम्

सूत उवाच

पुरा कैलासशिखरे मार्कण्डेयो महामुनिः ।
पप्रच्छ गिरिजानाथं सिद्धगन्धर्वसेवितम् ॥

सहस्रार्कप्रतीकाशं त्रिनेत्रं चन्द्रशेखरं ।
भगवत्या कृतं कर्म दानवानां रणे कथम् ॥

श्री शिव उवाच

शृणु वत्स प्रवक्ष्यामि यन्मां त्वं परिपृच्छसि ।
त्रिगुणा श्रीर्महालक्ष्मीः योऽसौभाग्यवती परा ॥

योगनिद्रानिमग्नस्य विष्णोरमिततेजसः ।
पिंजूषतत्समुद्भूतौ विख्यातौ मधुकैटभौ ॥

तयोः विष्णोरभूद्भूयो युद्धं सार्वभयङ्करम् ।
चक्रिणा निहतावेतौ महामायाविमोहितौ ॥

अथ देवशरीरेभ्यः प्रादुर्भूता महेश्वरी ।
महिषं सा महावीर्यं अवधीन्नामरूपकम् ॥

ततो दैत्यार्दितैः देवैः पुरुहूतादिभिः स्तुता ।

सैषा भगवती दैत्यं धूम्रलोचनसंज्ञितम् ॥

चण्डमुण्डौ महावीर्यौ रक्तबीजं भयङ्करम् ।

निहत्य देवी दैत्येन्द्रं निशुम्भमुरुविक्रमम् ॥

शुम्भासुरं महावीर्यं देवतामृत्युरूपिणम् ।

युध्यमानं ससैन्यं तं अवधीदम्बिका पुनः ॥

देवाश्च ऋषयः सिद्धाः गन्धर्वाश्च मुदा तदा ।

तुष्टुवुः भक्तिनम्रात्ममूर्तयः परमेश्वरीम् ॥

सूत उवाच

एतत्च्छ्रुत्वा शिवोक्तं तत् मार्कण्डेयो महामुनिः ।

पद्मैर्नाम्नां सहस्रेण पूजयामास तां शिवाम् ॥

ॐ अस्यश्री मूकाम्बिकायाः

वरदिव्यसहस्रनामस्तोत्रमालामहामन्त्रस्य

मार्कण्डेय भगवान् ऋषिः - गायत्री छन्दः -

त्रिमूर्त्यैक्यस्वरूपिणी महाकाली-महालक्ष्मी-महासरस्वती

त्रिगुणात्मिका श्री मूकाम्बिका देवता -

ह्लां बीजं - ह्लीं शक्तिः - ह्लूं कीलकं -

श्री मूकाम्बिका वरप्रसादसिद्ध्यर्थे जपे विनियोगः ॥

[ह्लां इत्यादि वा मूकाम्बिकायाः गौरी पञ्चदशाक्षर्याख्या

बालकुमारिका विद्यया वा न्यासमाचरेत् ]

ध्यानम्

शैलाधिराजतनयां शरदिन्दुकोटिभास्वन्
मुखाम्बुजकिरीटयुतां त्रिनेत्राम् ।
शङ्खार्यभीतिवरवर्यकरां मनोज्ञां
मूकाम्बिकां मुनिसुराऽभयदां स्मरामि ॥

प्रमत्त मधुकैटभौ महिषदानवं याऽवधीत्
सधूम्रनयनाह्वयौ सबलचण्डमुण्डावपि ।
सरक्तदनुजौ भयङ्करनिशुभशुम्भासुरौ असौ
भगवती सदा हृदि विभातु मूकाम्बिका ॥

प्रपन्नजनकामदां प्रबलमूकदर्पापहां
अनुष्णसुकलाधरां अरिदराभयेष्टान्विताम् ।
तटिद्विसरभासुरां कुटजशैलमूलाश्रितां
अशेषविभुधात्मिकां अनुभजामि मूकाम्बिकाम् ॥

॥लमित्यादि पञ्चपूजा॥

श्री मार्कण्डेय उवाच

श्रीं ह्रीं ऐं ॐ

मूकाम्बिका मूकमाता मूकवाग्भूतिदायिनी
महालक्ष्मीः महादेवी महारज्यप्रदायिनी ।
महोदया महारूपा मान्या महितविक्रमा
मनुवन्द्या मन्त्रिवर्या महेष्वासा मन्सविनी ॥

मेनकातनया माता महिता मातृपूजिता
महती मारजननी मृतसंजीविनी मतिः ।
महनीया मदोल्लासा मन्दारकुसुमप्रभा माधवी
मल्लिकापूज्या मलयाचलवासिनी ॥

महाङ्कभगिनी मूर्ता महासारस्वतप्रदा
मर्त्यलोकाश्रया मन्युः मतिदा मोक्षदायिनी ।
महापूज्या मखफलप्रदा मघवदाश्रया
मरीचिमारुतप्राणाः मनुज्येष्ठा महौषधिः ॥

महाकारुणिका मुक्ताभरणा मङ्गलप्रदा
मणिमाणिक्यशोभाढ्या मदहीना मदोत्कटा ।
महाभाग्यवती मन्दस्मिता मन्मथसेविता

माया विद्यामयी मंजुभाषिणी मदलालसा ॥

मृडाणी मृत्युमथिनी मृदुभाषा मृडप्रिया
मन्त्रज्ञा मित्रसङ्काशा मुनिः महिषमर्दिनी ।
महोदया महोरस्का मृगदृष्टिः महेश्वरी
मृनालशीतला मृत्युः मेरुमन्दरवासिनी ॥

मेध्या मातङ्गगमना महामारीस्वरूपिणी
मेघश्यामा मेघनादा मीनाक्षी मदनाकृतिः ।
मनोन्मयी महामाया महिषासुरमोक्षदा
मेनकावन्दिता मेन्या मुनिवन्दितपादुका ॥

मृत्युवन्ध्या मृत्युदात्री मोहिनी मिथुनाकृतिः
महारूपा मोहिताङ्गी मुनिमानससंस्थिता ।
मोहनाकारवदना मुसलायुधधारिणी
मरीचिमाला माणिक्यभूषणा मन्दगामिनी ॥

महिषी मारुतगतिः महालावण्यशालिनी
मृदण्गनादिनी मैत्री मदिरामोदलालसा ।
मायामयी मोहनाशा मुनिमानसमन्दिरा
मार्ताण्डकोटिकिरणा मिथ्याज्ञाननिवारिणी ॥

मृगाङ्कवदना मार्गदायिनी मृगनाभिधृक्

मन्दमारुतसम्सेव्या मुदारतरुमूलगा ।
मन्दहासा मदकरी मधुपानसमुद्यता मधुरा
माधवनुता माधवी माधवार्चिता ॥

मार्ताण्डकोटिजननी मार्ताण्डगतिदायिनी
मृनालमूर्तिः मायावी महासाम्राज्यदायिनी ।
कान्ता कान्तमुखी काली कचनिर्जितभृङ्गिका
कञ्जाक्षी कञ्जवदना कस्तूरीतिलकोज्वला ॥

कलिकाकारवदना कर्पूरामोदसम्युता
कोकिलालापसङ्गीता कनकाकृतिबिम्बभृत् ।
कम्बुकण्ठी कञ्जहारा कलिदोषविनाशिनी
कञ्चुकाढ्या कञ्जरूपा काञ्चीभूषणराजिता ॥

कण्ठीरवजितामध्या काञ्चीदामविभूषिता
कृतकिङ्किणिकाशोभा काञ्चनस्राविनीविका ।
काञ्चनोत्तमशोभाढ्या कनकाक्लृप्तपादुका
कण्ठीरवसमासीना कण्ठीरवपराक्रमा ॥

कल्याणी कमला काम्या कमनीया कलावती
कृतिः कल्पतरुः कीर्तिः कुटजाचलवासिनी ।
कविप्रिया काव्यलोला कपर्दीरुचिराकृतिः
कण्ठीरवध्वजा कामरूपा कामितदायिनी ॥

कृषाणुः केशवनुता कृतप्रज्ञा कृशोदरी
कोशाधीश्वरसंसेव्या कृशाकर्षितपातका ।
करीन्द्रगामिनी केळी कुमारी कलभाषिणी
कलिदोषहरा काष्ठा करवीरसुमप्रिया ॥

कलारूपा कृष्णनुता कलाधरसुपूजिता
कुब्जा कञ्जेक्षणा कन्या कलाधरमुखा कविः ।
कला कलाङ्गी कावेरी कौमुदी कालरूपिणी
कलाढ्या कोलसंहर्त्री कुसुमाढ्या कुलाङ्गना ॥

कुचोन्नता कुङ्कुमाढ्या कौसुम्भकुसुमप्रिया
कचशोभा कालरात्रिः कीचकारण्यसेविता ।
कुष्ठरोगहरा कूर्मपृष्ठा कामितविग्रहा
कलानना कलालापा कलभाधीश्वरार्चिता ॥

केतकीकुसुमप्रीता कैलासपददायिनी
कपर्दिनी कलामाला केशवार्चितपादुका ।
कुशात्मजा केशपाशा कोलापुरनिवासिनी
कोशनाथा क्लेशहन्त्री कीशसेव्या कृपापरा ॥

कौन्तेयार्चितपादाब्जा कालिन्दी कुमुदालया
कनत्कनकताटङ्का करिणी कुमुदेक्षणा ।

कोकस्तनी कुन्दरदना कुलमार्गप्रवर्तिनी
कुबेरपूजिता स्कन्दमाता कीलालशीतला ॥

काली कामकला काशी काशपुष्पसमप्रभा
किन्नरी कुमुदाह्लादकारिणी कपिलाकृतिः ।
कार्यकारणनिर्मुक्ता क्रिमिकीटान्तमोक्षदा
किरातवनिता कान्तिः कार्यकारणरूपिणी ॥

कपिला कपिलाराध्या कपीशध्वजसेविता
कराली कार्तिकेयाख्यजननी कान्तविग्रहा ।
करभोरुः करेणुश्रीः कपालिप्रीतिदायिनी
कोलर्षिवरसम्सेव्या कृतज्ञा काङ्क्षितार्थदा ॥

बाला बालनिभा बाणधारिणी बाणपूजिता
बिसप्रसूननयना बिसतन्तुनिभाकृतिः ।
बहुप्रदा बहुबला बालादित्यसमप्रभा
बलाधरहिता बिन्दुनिलया बगलामुखी ॥

बदरीफलवक्षोजा बाह्यदम्भविवर्जिता
बला बलप्रिया बन्धुः बन्धा बौद्धा बुधेश्वरी ।
बिल्वप्रिया बाललता बालचन्द्रविभूषिता
बुद्धिदा बन्धनच्छेत्री बन्धूककुसुमप्रिया ॥

ब्राह्मी ब्रह्मनुता ब्रध्नतनया ब्रह्मचारिणी
बृहस्पतिसमाराध्या बुधार्चितपदाम्बुजा ।
बृहत्कुक्षिः बृहद्घ्राणी बृहत्पृष्ठा बिलेशया
बर्हिर्ध्वजसुता बर्हिकचा बीजाश्रया बला ॥

बिन्दुरूपा बीजापूरप्रिया बालेन्दुशेखरा
बिजाङ्कुरोद्भवा बीजरूपिणी ब्रह्मरूपिणी ।
बोधरूपा बृहद्रूपा बन्धिनी बन्धमोचिनी
बिम्बसंस्था बालरूपा बालरात्रीशधारिणी ॥

वनदुर्गा वह्निनौका श्रीवन्द्या वनसंस्थिता
वह्नितेजा वह्निशक्तिः वनितारत्न रूपिणी ।
वसुन्धरा वसुमती वसुधा वसुदायिनी
वासवादिसुराराध्या वन्ध्यताविनिवर्तिनी ॥

विवेकिनी विशेषज्ञा विष्णुः वैष्णवपूजिता
पण्डिताखिलदैत्यारिः विजया विजयप्रदा ।
विलासिनी वेदवेद्या वियत्पूज्या विशालिनी
विश्वेश्वरी विश्वरूपा विश्वसृष्टिविधायिनी ॥

वीरपत्नी वीरमाता वीरलोकप्रदायिनी
वरप्रदा वर्यपदा वैष्णवश्रीः वधूवरा ।
वधूः वारिधिसञ्जाता वारणादिसुसंस्थिता

वामभागाधिका वामा वाममार्गविशारदा ॥

वामिनी वज्रिसम्सेव्या वज्राद्यायुधधारिणी
वश्या वेद्या विश्वरूपा विश्ववन्द्या विमोहिनी ।
विद्वद्रूपा वज्रनखा वयोवस्थाविवर्जिता
विरोधशमनी विद्या वारितौघा विभूतिदा ॥

विश्वात्मिका विश्वपाशमोचिनी वारणस्थिता
विबुधार्च्या विश्ववन्द्या विश्वभ्रमणकारिणी ।
विलक्षणा विशालाक्षी विश्वामित्रवरप्रदा
विरूपाक्षप्रिया वारिजाक्षी वारिजसम्भवा ॥

वाङ्ग्मयी वाक्पतिः वायुरूपा वारणगामिनी
वार्धिगम्भीरगमना वारिजाक्षसती वरा ।
विषया विषयासक्ता विद्याऽविद्यास्वरूपिणी
वीणाधरी विप्रपूज्या विजया विजयान्विता ॥

विवेकज्ञा विधिस्तुता विशुद्धा विजयार्चिता
वैधव्यनाशिनी वैवाहिता विश्वविलासिनी ।
विशेषमानदा वैद्या विबुधार्तिविनाशिनी
विपुलश्रोणिजघना वलित्रयविराजिता ॥

विजयश्रीः विधुमुखी विचित्राभरणान्विता

विपक्षव्रातसंहर्त्री विपत्संहारकारिणी ।
विद्याधरा विश्वमयी विरजा वीरसंस्तुता
वेदमूर्तिः वेदसारा वेदभाषाविचक्षणा ॥

विचित्रवस्त्राभरणा विभूषितशरीरिणी
वीणागायनसम्युक्ता वीतरागा वसुप्रदा ।
विरागिणी विश्वसारा विश्वावस्थाविवर्जिता
विभावसुः वयोवृद्धा वाच्यवाचकरूपिणी ॥

वृत्रहन्त्री वृत्तिदात्री वाक्स्वरूपा विराजिता
व्रतकार्या वज्रहस्ता व्रतशीला व्रतान्विता ।
व्रतात्मिका व्रतफला व्रतषाड्गुण्यकारिणी
वृत्तिः वादात्मिका वृत्तिप्रदा वर्या वषट्कृता ॥

विज्ञात्री विबुधा वेद्या विभावसुसमद्युतिः
विश्ववेद्या विरोधघ्नी विबुधस्तोमजीवना ।
वीरस्तुत्या वियद्याना विज्ञानघनरूपिणी
वरवाणी विशुद्धान्तःकरणा विश्वमोहिनी ॥

वागीश्वरी वाग्विभूतिदायिनी वारिजानना
वारुणीमदरक्ताक्षी वाममार्गप्रवर्तिनी ।
वामनेत्रा विराड्रूपा वेत्रासुरनिषूदिनी
वाक्यार्थज्ञानसन्धात्री वागधिष्ठानदेवता ॥

वैष्णवी विश्वजननी विष्णुमाया वरानना
विश्वम्भरी वीतिहोत्रा विश्वेश्वरविमोहिनी ।
विश्वप्रिया विश्वकर्त्री विश्वपालनतत्परा
विश्वहन्त्री विनोदाढ्या वीरमाता वनप्रिया ॥

वरदात्री वीतपानरता वीरनिबर्हिणी
विद्युन्निभा वीतरोगा वन्द्या विगतकल्मषा ।
विजिताखिलपाषण्डा वीरचैतन्यविग्रहा
रमा रक्षाकरी रम्या रमणीया रणप्रिया ॥

रक्षापरा राक्षसघ्नी राज्ञी रमणराजिता
राकेन्दुवदना रुद्रा रुद्राणी रौद्रवर्जिता ।
रुद्राक्षधारिणी रोगहारिणी रङ्गनायिका
राज्यश्रीरञ्जितपदा राजराजनिषेविता ॥

रुचिरा रोचना रोची ऋणमोचनकारिणी
रजनीशकलायुक्ता रजताद्रिनिकेतना ।
रागोष्ठी रागहृदया रामा रावणसेविता
रक्तबीजार्दिनी रक्तलोचना राज्यदायिनी ॥

रविप्रभा रतिकरा रत्नाढ्या राज्यवल्लभा
राजत्कुसुमधम्मिल्ला राजराजेश्वरी रतिः ।

राधा राधार्च्चिता रौद्री रणन्मञ्जीरनूपुरा
राकारात्रिः ऋजूराशिः रुद्रदूती ऋगात्मिका ॥

राजच्चन्द्रजटाजूटा राकेन्दुमुखपङ्कजा
रावणारिहृदावासा रावणेशविमोहिनी ।
राजत्कनककेयूरा राजत्करजिताम्बुजा
रागहारयुता रामसेविता रणपण्डिता ॥

रम्भोरू रत्नकटका राजहम्सगतागतिः
राजिवरञ्जितपदा राजसिम्हासनस्थिता ।
रक्षाकरी राजवन्द्या रक्षोमण्डलभेदिनी
दाक्षायणी दान्तरूपा दानकृत् दानवार्दिनी ॥

दारिद्र्यनाशिनी दात्री दयायुक्ता दुरासदा
दुर्जया दुःखशमनी दुर्गदात्री दुरत्यया ।
दासीकृतामरा देवमाता दाक्षिण्यशालिनी
दौर्भाग्यहारिणी देवी दक्षयज्ञविनाशिनी ॥

दयाकरी दीर्घबाहुः दूतहन्त्री दिविस्थिता
दयारूपा देवराजसंस्तुता दग्धमन्मथा ।
दिनकृत्कोटिसङ्काशा दिविषद्दिव्यविग्रहा
दीनचिन्तामणिः दिव्यस्वरूपा दीक्षितायिनी ॥

दीधितिः दीपमालाढ्या दिक्पतिः दिव्यलोचना
दुर्गा दुःखौघशमनी दुरितघ्नी दुरासदा ।
दुर्ज्ञेया दुष्टशमनी दुर्गामूर्तिः दिगीश्वरी
दुरन्ताख्या दुष्टदाह्या दुर्धर्षा दुन्दुभिस्वना ॥

दुष्प्रधर्षा दुराराध्या दुर्नीतिजननिग्रहा
दूर्वादलश्यामलाङ्गी द्रुतदृग्धूषणोज्झिता ।
देवता देवदेवेशी देवी देशिकवल्लभा
देविका देवसर्वस्वा देशप्रादेशकारिणी ॥

दोषापहा दोषदूरा दोषाकरसमानना
दोग्ध्री दौर्जन्यशमनी दौहित्रप्रतिपादिनी ।
दूत्यादिक्रीडनपरा द्युमणिः द्यूतशालिनी
द्योतिताशा द्यूतपरा द्यावाभूमिविहारिणी ॥

दन्तिनी दण्डिनी दंष्ट्री दन्तशूकविषापहा
दम्भदूरा दन्तिसुता दण्डमात्रजयप्रदा ।
दर्वीकरा दशग्रीवा दहनार्चिः दधिप्रिया
दधीचिवरदा दक्षा दक्षिणामूर्तिरूपिणी ॥

दानशीला दीर्घवर्ष्मा दक्षिणार्धेश्वरा
दृता दाडिमीकुसुमप्रीता दुर्गदुष्कृतहारिणी ।
जयन्ती जननी ज्योत्स्ना जलजाक्षी जयप्रदा

जरा जरायुजप्रीता जरामरणवर्जिता ॥

जीवना जिवनकरी जिवेश्वरविराजिता
जगद्योनिः जनिहृरा जातवेदा जलाश्रया ।
जिताम्बरा जिताहृारा जिताकारा जगत्प्रिया
ज्ञानप्रिया ज्ञानघना ज्ञानविज्ञानकारिणी ॥

ज्ञानेश्वरी ज्ञानगम्या ज्ञाताज्ञातौघनाशिनी
जिग्ज्ञासा जीर्णरहिता ज्ञानिनी ज्ञानगोचरा ।
अज्ञानध्वम्सिनी ज्ञानरूपिणी ज्ञानकारिणी
जातार्तिशमनी जन्महारिणी ज्ञानपञ्जरा ॥

जातिहीना जगन्माता जाबालमुनिवन्दिता
जागरूका जगत्पात्री जगद्वन्द्या जगद्गुरुः ।
जलजाक्षसती जेत्री जगत्संहारकारिणी
जितक्रोधा जितरता जितचन्द्रमुखाम्बुजा ॥

यज्ञेश्वरी यज्ञफला यजना यमपूजिता
यतिः योनिः यवनिका यायजूका युगात्मिका ।
युगाकृतिः योगदात्री यज्ञा युद्धविशारदा
युग्मप्रिया युक्तचित्ता यत्नसाध्या यशस्करी ॥

यामिनी यातनहरा योगनिद्रा यतिप्रिया

यातहृतकमला यज्या यजमानस्वरूपिणी ।
यक्षेशी यक्षहरणा यक्षिणी यक्षसेविता
यादवस्त्री यदुपतिः यमलार्जुनभञ्जना ॥

व्यालालङ्कारिणी व्याधिहारिणी व्ययनाशिनी
तिरस्कृतमहाविद्या तिर्यक्पृष्ठा तिरोहिता ।
तिलपुष्पसमाकारनासिका तीर्थरूपिणी
तिर्यग्रूपा तीर्थपादा त्रिवर्गा त्रिपुरेश्वरी ॥

त्रिसंध्या त्रिगुणाध्यक्षा त्रिमूर्तिः त्रिपुरान्तकी
त्रिनेत्रवल्लभा त्र्यक्षा त्रयी त्राणपरायणा ।
तारणा तारिणी तारा तारापरिकलावृता
तारात्मिका तारजपा तुरिताढ्या तरूत्तमा ॥

तूर्णप्रसादा तूणीरधारिणी तूर्णसंस्कृता
तोषिणी तूर्णगमना तुलाहीनाऽतुलप्रभा ।
तरङ्गिणी तरङ्गाढ्या तुला तुन्दिलपुत्रिणी
तनूनपात् तन्तुरूपा तारगी तन्त्ररूपिणी ॥

तारकारिः तुङ्गकुचा तिलकालिः तिलार्चिता
तमोपहा तार्क्ष्यगतिः तामसी त्रिदिवेश्वरी ।
तपस्विनी तपोरूपा तापसेड्या त्रयीतनुः
तपःफला तपस्साध्या तलातलनिवासिनी ॥

ताण्डवेश्वरसम्प्रीता तटिदीक्षणसम्भ्रमा

तनुमध्या तनूरूपा तळिभानुः तटित्प्रभा ।

सदस्या सदया सर्ववन्दिता सदसत्परा

सद्यःप्रसादिनी सुधीः सच्चिदानन्दरूपिणी ॥

सरिद्वेगा सदाकारा सरित्पतिवसुन्धरा

सरीसृपाङ्गाभरणा सर्वसौभाग्यदायिनी ।

सामसाध्या सामगीता सोमशेखरवल्लभा

सोमवक्त्रा सौम्यरूपा सोमयागफलप्रदा ॥

सगुणा सत्क्रिया सत्या साधकाभीष्टदायिनी

सुधावेणी सौधवासा सुज्ञा सुश्रीः सुरेश्वरी ।

केतकीकुसुमप्रख्या कचनिर्जितनीरदा

कुन्तलायितभृङ्गालिः कुण्डलीकृतकैशिकी ॥

सिन्दूराङ्कितकेशान्ता कञ्जाक्षी सुकपोलिका

कनत्कनकताटङ्का चम्पकाकृतिनासिका ।

नासालङ्कृतसन्मुक्ता बिम्बोष्ठी बालचन्द्रधृत्

कुन्ददन्ता त्रिनयना पुण्यश्रवणकीर्तना ॥

कालवेणी कुचजितचकोरा हाररञ्जिता

करस्थाङ्गुलिका रत्नकाञ्चीदामविराजिता ।

रत्नकिङ्किणिका रम्यनीविका रत्नकञ्चुका

हरिमध्याऽगाधपृष्ठा करभोरुः नितम्बिनी ॥

पदनिर्जितपद्माभा ऊर्मिकारञ्जिताङ्गुलिः

गाङ्गेयकिङ्किणीयुक्ता रमणीयाङ्गुलीयुता ।

माणिक्यरत्नाभरणा मधुपानविशारदा

मधुमध्या मन्दगता मत्तेभस्थाऽमरार्चिता ॥

मयूरकेतुजननी मलयाचलपुत्रिका

परार्धभागा हर्यक्षवाहना हरिसोदरी ।

हाटकाभा हरिनुता हम्सगा हम्सरूपिणी

हर्षरूपा हरिपतिः हयारूढा हरित्पतिः ॥

सर्वगा सर्वदेवेशी सामगानप्रिया सती

सर्वोपद्रवसंहर्त्री सर्वमङ्गलदायिनी ।

साधुप्रिया सागरजा सर्वकर्त्री सनातनी

सर्वोपनिषदुद्गीता सर्वशत्रिनिबर्हिणी ॥

सनकादिमुनिस्तुत्या सदाशिवमनोहरा

सर्वज्ञा सर्वजननी सर्वाधारा सदागतिः ।

सर्वभूतहिता साध्या सर्वशक्तिस्वरूपिणी

सर्वगा सर्वसुखदा सर्वेशी सर्वरञ्जिनी ॥

शिवेश्वरी शिवारध्या शिवानन्दा शिवात्मिका
सूर्यमण्डलमध्यस्था शिवा शङ्करवल्लभा ।
सुधाप्लवा सुधाधारा सुखसंवित्स्वरूपिणी
शिवङ्करी सर्वमुखी सूक्ष्मज्ञानस्वरूपिणी ॥

अद्वयानन्दसंशोभा भोगस्वर्गापवर्गदा
विष्णुस्वसा वैष्णवाप्ता विविदार्थविनोदिनी ।
गिरिजा जिरिशप्रीता शर्वणी सह्लमदायिनी
हृत्पद्ममध्यनिलया सर्वोत्पत्तिः स्वरात्मिका ॥

तरुणी तरुणार्काभा चिन्त्याचिन्त्यस्वरूपिणी
श्रुतिस्मृतिमयी स्तुत्या स्तुतिरूपा स्तुतिप्रिया ।
ॐकारगर्भा ह्योऽङ्कारी कङ्काली कालरूपिणी
विश्वम्भरी विनीतस्था विधात्री विविधप्रभा ॥

श्रीकरी श्रीमती श्रेयः श्रीदा श्रीचक्रमध्यगा
द्वादशान्तसरोजस्था निर्वाणसुखदायिनी ।
साध्वी सर्वोद्भवा सत्वा श्रीकण्ठस्वान्तमोहिनी
विद्यातनुः मन्त्रतनुः मदनोद्यानवासिनी ॥

योगलक्ष्मीः राज्यलक्ष्मीः महालक्ष्मीः सरस्वती
सदानन्दैकरसिका ब्रह्मविष्णवादिवन्दिता ।
कुमारी कपिला काली पिङ्गाक्षी कृष्णपिङ्गला

चण्डघंटाः महासिद्धिः वाराही वरवर्णिनी ॥

कात्यायनी वायुवेगा कामाक्षी कर्मसाक्षिणी
दुर्गादेवी महादेवी आदिदेवी महासना ।
महाविद्या महामाया विद्यालोला तमोमयी
शङ्खचक्रगदाहस्ता महामहिषमर्दिनी ॥

खड्गिनी शूलिनी बुद्धिरूपिणी भूतिदायिनी
वारुणी जटिनी त्रस्तदैत्यसङ्घा शिखण्डिनी ।
सुरेश्वरी शस्त्रपूज्या महाकाली द्विजार्चिता
इच्छाज्ञानक्रिया सर्वदेवतानन्दरूपिणी ॥

मत्तशुम्भनिशुम्भघ्नी चण्डमुण्डविघातिनी
वह्निरूपा महाकान्तिः हरा ज्योत्स्नावती स्मरा ।
वागीश्वरी व्योमकेशी मूकहन्त्री वरप्रदा
स्वाहा स्वधा सुधाश्वमेधा श्रीः ह्रीः गौरी परमेश्वरी ॥ ॐ

॥ इति श्री स्कान्दमहापुराणे कोलापुरमूकाम्बिकामाहात्म्याख्ये
उपाख्याने श्री देव्याः दिव्यवरसाहास्रनाम स्तोत्रं शिवमस्तु ॥